श्री सीतारामचन्द्राभ्यां नमः

श्रीमते रामनन्दाचार्याय नमः

# परम्पराचार्यस्तवः (वैष्णव भाष्यकार श्री वैष्णवाचार्य प्रणीत)

*दीनबन्धु परब्रह्म सद्गुणानां महार्णवम् । सच्चरित्रयुतं श्रीमद्रामं वन्दे जगद्गुरुम् ॥१॥*

*जगदीशस्य रामस्य प्रियां विश्वस्य रक्षिकाम् । जगतो गुरुतां यातां जननी जानकी भजे ॥२॥*

*रामतारकदानेन लोकानां तारकं परम् । वन्दे प्राभञ्जनं श्रीमदाञ्जनेयं जगद्गुरुम् ॥३॥*

*मन्त्रदं श्रीवशिष्ठस्य विशिष्टाद्वैतवादिनम् । रामभक्तिरतं वन्दे श्रीब्रह्माणं जगद्गुरुम् ॥४॥*

*नित्याधान तत्त्वज्ञं विशिष्टाद्वैत बोधकम्। श्रीवशिष्ठमहं वन्दे ब्रह्मपुत्रं जगद्गुरुम् ॥५॥*

*श्रीवशिष्ठस्य शिष्यं च विशिष्टाद्वैतवादिनम् । वन्दे पराशराचार्यं वेदान्तज्ञं जगद्गुरुम् ॥६॥*

*शुक्राचार्यगुरुं श्रीमद्राममन्त्रप्रदायिनम्। ब्रह्मसूत्र प्रणेतारं वन्दे व्यासं जगद्गुरुम् ॥७॥*

*श्रीमद्बोधायनाचार्य सद्गुरुं ब्रह्मवेदिनम्। शुकाचार्यमहं वन्दे व्यासपुत्रं जगद्गुरुम् ॥८॥*

*श्रीपुरुषोत्तमाचार्य शुकशिष्यं मुनीश्वरम् । श्रीमद्बोधायनं वन्दे वृत्तिकारं जगद्गुरुम् ॥९॥*

*बोधायनस्य सच्छिष्यं भक्तिसाधनबोधकम् । श्रीमद्गङ्गाधराचार्यं नित्यं वन्दे जगद्गुरुम् ॥१०॥*

*गङ्गाधरार्य सच्छिष्यं वेदान्तसारबोधकम्। सदाचार्यवरं वन्दे सदानन्दं जगद्गुरुम् ॥११॥*

*सदानन्दार्य सच्छिष्यं अर्चिरादिप्रबोधकम् । वन्दे रामेश्वरानन्दाचार्यवर्यं जगद्गुरुम् ॥१२॥*

*ब्रह्म ब्रह्मनिष्ठं च ब्रह्मकार्यविमर्शकम् । ब्रह्मसूत्रविदं वन्दे द्वारानन्दं जगद्गुरुम् ॥१३॥*

*श्रीप्रमिताक्षरावृत्तेः कारकं ब्रह्मवेदिनम् । राघवस्तावकं वन्दे देवानन्दं जगद्गुरुम् ॥१४॥*

*देवानन्दस्य सच्छिष्यं श्रीसम्प्रदायरक्षकम् । नवरत्नीकृतं वन्दे श्यामानन्दं जगद्गुरुम् ॥१५॥*

*श्यामानन्दार्यसच्छिष्यं श्रौत सिद्धान्तवेदिनम् । श्रौताचाररतं वन्दे श्रुतानन्दं जगद्गुरुम् ॥१६॥*

*सच्चिदानन्दरामस्य भक्तं भक्तिप्रचारकम् । चिदात्मबोधकं वन्दे चिदानन्दं जगद्गुरुम् ॥१७॥*

*चिदानन्दार्यशिष्यं च वैष्णवधर्मरक्षकम् । श्रीरामस्तावकं वन्दे पूर्णानन्दं जगद्गुरुम् ॥१८॥*

*विशिष्टाद्वैततत्त्वज्ञं स्तोतारं श्रीश्रियः श्रियः । सद्धर्मबोधकं वन्दे हर्यानन्दं जगद्गुरुम् ॥२०॥*

*सिद्धिदं सिद्धवन्द्यं च राघवब्रह्मबोधकम् वन्दे श्रीराघवानन्दाचार्यवर्यं जगद्गुरुम् ॥२१॥*

*आनन्दभाष्यकर्त्तारं सदाचार्य सुरेश्वरम् । वन्दे यतीश्वरं रामानन्दाचार्यं जगद्गुरुम् ॥२२॥*

*रामादारभ्य ये श्रीमद्रामानन्दार्यमध्यमाः अस्मदचार्यपर्यन्ता आचार्यास्तान् नमाम्यहम् ॥२३॥*

*वैष्णव भाष्यकार श्री वैष्णवाचार्यनिर्मितः । स्तवोऽयं भवतात् पठात् सर्वथा सुखदायकः ॥२४॥*